श्रीगणेशाय नमः ॥ महो महत्समाराध्य जलोत्सर्गमथोक्तवान् । प्रतिष्ठां सर्वदेवानां नीलकण्ठा वदत्यसौ ॥ १ ॥ जज्ञे पितामहतनोः खलु कश्यपो यस्तस्मादजायत मुनिस्तु विभाण्डकाख्यः। तं पुत्रिणां धुरमरोपयदृष्यशृङ्गस्तस्यान्वयेप्यजनि शृङ्गिवराभिधानः॥ २ ॥ तस्मिन्वंशे महति वितते सेङ्गराख्ये नृपाणां राजा कर्णः समजनि यथा सागरे शीतरश्मिः । कीर्त्या यस्य प्रथिततरया श्रोत्रजातेभिपूर्णे कर्णस्यापि प्रविततकथा नावकाशं लभन्ते॥ ३॥ विशोकाख्यदेवस्ततस्तत्सुतोभूद्विशोकीकृता येन सर्वा धरित्री । ततोप्यास राजास्तशत्रुस्ततोभूद्दयाख्यो रयेणैव सर्वाहितघ्नः ॥ ४ ॥ बभूवाथ वैराटराजस्ततोभून्नृपो मेदिनीवल्लभो बीढराजः । ततो ब्रह्मदेवस्ततो मन्युदेवस्ततोभून्नृपश्चन्द्रपालाभिधानः ॥ ५ ॥ शिवगणाख्यनृपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः। शिवगुणेन समः सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः॥ ६ ॥ रोलीचन्द्रइति तत्तनयोभूत्कर्मसेननृपतिस्तमथानु। लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥ यशोदेवस्ततोजातस्ताराचन्द्रनृपस्ततः । चक्रसेनस्ततो राजा राजसिंहनृपो यतः ॥ ८ ॥ ततोप्यभूद्भूपतिः साहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः । अभूत्ततः श्रीभगवन्तदेवः सदैव भाग्योदयवान् क्षितीशः ॥ ९ ॥ यद्दानद्रविणादिनिर्जितवपू रत्नाचलो लज्जया दूरेस्तब्ध

इलावृते निविशते नो यत्र पुंसां गतिः । किंच त्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्धितस्तेजोग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १० ॥ आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो भट्टश्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः । आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धान् दृष्ट्वा सम्यग्विविच्य प्रविततकिरणस्तन्यते भास्करोऽयम् ॥ ११ ॥ प्रतारकैराहृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् । ऊनोक्तितातोनहितेन काचित् वपुष्यहीनापचितिर्न हीयते ॥ १२ ॥ संस्काराचारकालाः समुचितरचनाः श्राद्धनीतीविवादो दानोत्सर्गप्रतिष्ठा जगति जयकराः सङ्गतार्थानुबद्धाः । प्रायश्चित्तं विशुद्धिस्तदनुनिगदिता शांतिरेवं क्रमेण ख्याता ग्रंथेऽत्र शुद्धे बुधजन सुखदा द्वादशैते मयूखाः ॥ १३ ॥ भगवंतभास्कराख्ये ग्रन्थेऽस्मिन् शिष्टसंमते च ततः । प्रतिष्ठाविधिमयूखः प्रतन्यते नीलकण्ठेन ॥१४॥ तत्र तत्कालो विष्णुधर्मोत्तरे—चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते । रिक्तान्यतिथिषु स्यात्सा वारे भौमान्यके

---

१ प्रावृषि स्थापित लिङ्ग भवेद्गरदयोगदमितिनिर्णयसिंधौ । श्रेष्ठोत्तरेप्रतिष्ठास्यादयने मुक्तिमीहताम् । दक्षिणे तु मुमुक्षूणा मलमासे न सा द्वयोरिति शैवसिद्धांतशेखरोक्तेः आर्द्राप्रवेशात्पूर्वमाषाढेपि भवति मुक्तिकामाना तु दक्षिणायनेपि भवति ।

तथा ॥ इति । तत्रैव–आषाढे द्वे तथा मूलमुत्तरात्रयमेव च। ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा। हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा। अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥ इति। अत्राषाढे द्वे इत्यनेनैवोत्तराषाढाप्राप्तावप्युत्तरात्रयपदमुत्तराफाल्गुन्युत्तराभाद्रपदयोरर्थवत्। नारसिंहे– तथा महाश्विनो मास उत्तमः सर्वकामदः। देवी तत्र सदा शक्र पांसुनापि प्रतिष्ठिता। भवने फलदा पुंसां कर्कस्थे च वृषास्थिते। न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ॥ मातृभैरववाराहनारसिंहत्रिविक्रमाः। महिषासुरहंत्र्यश्च स्थाप्या वै दाक्षिणायने ॥ क्वचिन्निषेधः–आर्द्रादिके स्वातिविरामकाले नक्षत्रवृंदे दशके स्थितेऽर्के। विवाहचौलव्रतबंधदीक्षासुरप्रतिष्ठादि न कार्यमेव ॥ इति। अथ संभाराः। अर्कादिग्रहसमिधां प्रत्येकमष्टशतं संक्षेपपक्षे आज्यचर्वादि लोकपालादियागाय पलाशादिसमिधां

१ पचमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी। आसु प्रतिष्ठा विधिवत् कृता बहुफला भवेत्। बुधो बृहस्पतिः शुक्रस्त्रयोप्येते शुभप्रदाः। एभिर्निरीक्षित लग्न नक्षत्र च प्रशस्यते। शुभे लग्ने शुभे स्थाने शुभे क्रूरविवर्जिते। लग्ने ऋक्षे प्रकुर्वीत प्रतिष्ठाविधिमुत्तमम् ॥ अयने विषुवे तद्वत्षडशीतिमुखे तथा। एतेषु स्थापन कार्यं वेधिदृष्टेन कर्मणा। प्राजापत्येषु शयन श्वेतेषु स्थापन तथा। मुहूर्ते स्थापन कुर्यात्पुनर्ब्राह्मे विचक्षण. ॥ इति राजकौस्तुभे।

प्रत्येकमष्टसहस्रमष्टशतं वा पुष्पमालाः कुङ्कुमं कर्पूरः कस्तूरी चन्दनं गुग्गुलुधूपः दर्हनम् आरार्तिकं घण्टा पादुका दर्पणं बलिसामग्री पायसभक्ष्यं भोज्यनैवेद्यं होमार्थमाज्यातिलयवाक्षतफलादिकं प्रतिकुण्डंविष्टराश्चत्वारः प्रतिकुण्डं स्रुक्स्रुवौ आसनानि त्रिसूत्रीश्वेतोर्णासूत्रं सर्वतोभद्रादिरचनायै श्वेतरक्तपीतनीलकृष्णवर्णकाः स्नपनकलशाः पञ्चपल्लवाः कदलीस्तंभाः पताका दश ध्वजाश्च दश तेषां वेणुदंडाः वज्रमौक्तिकवैडूर्यशङ्खस्फटिकपुष्पराजेन्द्रनीलमहानीला इति रत्नाष्टकम्[2] । हरितालमनःशिलाभ्रकृष्णांजनमाक्षिककासीसस्वर्णमाक्षिकगैरिका इत्युपधात्वष्टकं तिलयवमुद्गगोधूमनीवारश्यामाकसर्षपव्रीहय इति बीजाष्टकं सुवर्णरजतताम्रलोहत्रपुसीसरंगरीत्याख्यधात्वष्टकं मधुपर्कपात्रं सौवर्णं वा ताम्रं वा अर्घपात्रं शक्त्यैकद्वित्रिमाषसुवर्णशलाकास्थापनीयकलशरत्नानि षोडशद्वारकलशाः अष्टौ लोकपालकलशाः वेदिकलशाश्चत्वारः वास्तुमण्डलकलशाः कुंडकलशाः कुण्डसंख्यया निद्राकलशाः स्नपनकलशाः पञ्चचत्वारिंशत्कलशसंख्यया शरावाणि धारासहस्रान्वितौ कलशौ गजाश्वस्थानवल्मीकसङ्गमनदी

१ अगरुरितिधूपविशेषः । २ मुक्तामाणिक्यवैडूर्यगोमेदावज्रविद्रुमौ । पुष्पराग मरकत नील चेति यथाक्रमात् ।

कूलद्वयवराहोत्खातराजद्वारमृदः मुरा मांसी वचा कुष्ठशैलेयहारिद्रादारुहारिद्रासटीचंपकमुस्ता इति दश सर्वौषध्यः पञ्चगव्यं पृथक्पृथक् व्रीहितिलयवगोधूमनीवारश्यामाकमुद्गा इति सप्त धान्यानि प्रतिमार्थं शय्या सोपस्करा श्वेतवस्त्रं चामरं विचित्रंवितानं त्रयो दुकूलपट्टाः ऋत्विग्वरणसामग्री शिल्पिवस्त्रयुगमित्यादिसंपादितसंभारो मूर्तिं प्रतिष्ठादिनात्प्राक् सप्तमादिने पञ्चमादिने तृतीयादिने द्वितीयदिने सद्योवा प्रासादाग्रे उत्तरे पूर्वेवा षोडश द्वादशहस्तंवा मण्डपं कृत्वा तन्मध्ये चतुरस्रां सप्तहस्तां पंचहस्तां चतुर्हस्तां वा हस्तोच्छ्रितां वेदिं मण्डपोत्तरे तदर्द्धेन तृतीयभागेन चतुर्थेन वा भागेन चतुर्द्वारं स्नानमण्डपं तत्र वेदिकात्रयं च कृत्वा शिल्पिस्थानात्प्रासादप्रादक्षिण्येन देवं तत्रानीयासने निधायाचान्तः प्राणानायम्य मासाद्युल्लिख्यास्यां मूर्तौ लिङ्गे वा देवकला सान्निध्यार्थमायुःश्रीसर्वफलाक्षय्यसुखकाम ईश्वरप्रीतिकामो वाऽमुकमूर्तौर्लिङ्गस्य वा प्रतिष्ठां करिष्ये इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं कृत्वा-प्रतिमायागासिद्ध्यर्थं श्राद्धमेतत्सुदुर्लभम् । यजना यात्मनः शक्यं करिष्ये मातृपूर्वकम् ॥ इति मंत्रमुक्त्वा मातृपूजनं नान्दीश्राद्धं च कृत्वाऽऽचार्यं वृत्वा द्वात्रिंशत षोडशाष्टौ चतुरो वा ऋत्विजोऽष्टौ चतुरो वा द्वारपालान्वृत्वा तान् संपूजयेन्मधुपर्कादिना

सदस्यवरणमप्यत्रोति त्रिविक्रमादयः । ततः-मंत्रमूर्तिर्भवान्नाथ संसारोच्छेदकारकः । देवः पूजार्हो यथा स्यात्कुरुधर्मोद्गतिश्च नः ॥ संसारभयभीतेन अयं यज्ञः सुभक्तितः । प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवत्विति ॥ आचार्यं संप्रार्थ्य सतूर्यघोषं सपरिकरः सपूर्णकुंभो भद्रंकर्णेभिरितिमंत्रेण महामण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । तत्राचार्यः-अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ इत्युक्त्वा तत्र सर्षपान्विकीर्य देवा आयान्तु यातुधाना अपयान्तु विष्णोदेवयजनं रक्षस्वेति रक्षां कृत्वा । वेदिकाग्नेयकोणे स्थूणां वसुदायैनमः वसुदामावाहयामीत्यालभ्य गंधपुष्पादिनार्चयेत् । ततः प्रादक्षिण्येन भद्रायै नम इति द्वितीयां अदित्यै नम इति तृतीयां नंदायैनम इति चतुर्थीम् । मंडपाग्नेयकोणे भूत्यै॰इतिप्रथमाम् ।ततः प्रादक्षिण्येन सरस्वत्यै॰पूर्वसंध्यायै॰मध्यसंध्यायै॰ पश्चिमसंध्यायै॰ सावित्र्यै॰बृहस्पत्यै॰ अदित्यै॰वितताये॰ पौर्णमास्यै॰ सिनीवाल्यै॰ ( १२ )इति षोडश स्थूणाः स्पृष्ट्वा पूजयेत् ॥ नागमात्रेनम इति बलिः कार्यः । सर्पेभ्यो नम इति शाखोद्बन्धनानि पूजयेत् । ततः पश्चिमद्वारेण निर्गत्य पूर्वदिगादिद्वारतोरणपूजामारभेत् । तत्र प्राच्यां सुदृढतोरणाय॰ आश्वत्थतोरणेनैनं यज्ञं रक्षसर्वविघ्नान्निवारयेति पूजयेत् । अथ त्रिशूलशृङ्गेषु प्रादक्षिण्येनेन्द्रं धातारं

भगमित्यादित्यन्यासं कुर्यात् । द्वारशाखयोर्ध्रुवमध्वरंचेति वसुद्वयमर्चयेत् । शाखामूलस्थयोर्धान्यरा इयोरुपरि रत्नगर्भौ प्रशांतशिशिरनामानौ कलशौ प्रतिष्ठाप्य पूजयेत् । ततो द्वारदेशे इन्द्रमावाह्य संपूज्य नमस्कृत्य इन्द्रायाहि चित्रभानो इति पीतां पताकां ध्वजं चालभ्य त्रातारमिन्द्रमिति तां तोर णोपरि निदध्यात् । इन्द्रं व इति इन्द्राय घृतौदनबलिदानम् । अग्निमीळ इत्यृग्वेदं पूजयेत् । ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इतिध्यानम् । तत्र श्रीसूक्तं पावमानं च सोमसूक्तं सुमङ्गलम् । पौरुषं रुद्रसूक्तं च वामदेव्यं तथैव च ॥ इतिद्वारपालजपः । अथाग्नेय कोणे अग्नये नम इत्यग्निमावाह्य पूजयेत् ॥ अग्नआयाहीति रक्तध्वजपताकालंभः त्वं नो अग्न इति पताकोच्छ्रयः । अग्निंदूतमिति घृतौदनबलिः । याम्ये सुभद्रतोरणाय नमः औदुम्बरतोरणेनं यज्ञं रक्ष सर्व-विघ्नान्निवारयेतिपूजयेत् शृङ्गेषु पूष्णे नमः मित्राय नमः वरुणायनम इत्यादित्यन्यासः । द्वारशाखयोः सोमाय० आपाय नम इति वसुद्वयमर्चयेत् । शाखामूलयोः पर्जन्याशोकनामानौ कुंभौ प्रतिष्ठाप्य पूज येत् । ततो द्वारदेशकलशे यममावाह्य नमस्कृत्य यमाय सोममिति श्यामध्वजपताकालंभः यमाय मधु

१ कलशान् । २ बलिदानान्ते सर्वत्र श्रोतानामनन् । ३ कलं । 

मत्तममिति तोरणोपरि निधानं यमाय सोममिति माषभक्तबलिदानम् । इषेत्वेति यजुर्वेदं पूजयेत् । कालराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः । काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इति यजुर्वेदध्यानम् । तत्र—आनो भद्रानुवाकश्च आशुः शिशानकस्तथा । यद्देवास्त्रीणि च पठेत्ततोऽष्टौ च पुनंतु माम् । अभिधा असि सप्तैव दीर्घायुस्ते ऋचं पठेत् । आप्यायस्व षट् नमोऽस्तु सर्पेभ्यः आकृष्णेन नमः शंभवे इत्येकामेकाग्निर्दैवताक्रमात् । त्रातारमिन्द्रमित्येकां सोमं राजानमेकया ॥ अन्नपते महाँ इन्द्रऋचं वाचं समग्रकं पठेत् । अथ निर्ऋतौ कलशे[1] निर्ऋतये नम इति निर्ऋतिमावाह्य पूजयेत् । मोषुणः परापरेति कृष्णध्वजपताकालम्भः । असुन्वन्तमिति ध्वजपताकोच्छ्रयणम् । निर्ऋतिं सम्पूज्य मोषुण इति कृष्णव्रीह्यन्नं घृतसहितं बलिं दद्यात् । अथ पश्चिमायां सुभीमतोरणायनमः । प्लाक्षतोरणैनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ इतिपूजयेत् । अथ त्रिशूलशृङ्गेषु-अर्यम्णे नमः, अंशवे नमः, विवस्वते नम इत्यादि त्यन्यासः । द्वारशाखयोः-अनिलाय नमः, अनलाय नमः इति वसुद्वयमर्चयेत्।शाखामूलयोर्धान्यपुञ्जयोः सञ्जीवनामृतनामानौ कुम्भौ प्रतिष्ठाप्य पूजयेत् । तंत्र वरुणमावाह्य नमस्कृत्य तत्त्वायामीति श्वेतध्वजप

[1] द्वारदेशे कलशे ।

ताकालंभः उदुत्तमं वरुणेति तोरणोपरि निधानम् । नवनीतोदनबलिदानम् । अग्न आयाहीति सामवेदं पूजयेत्।सामवेदस्तु पिंगाक्षो जागतःशक्रदैवतः।भारद्वाजस्तुविप्रेन्द्र ऋत्विक् त्वं मे मखे भव।इति सामवेद ध्यानम्॥तत्रजपः—इन्द्रायसामगायत अहमस्मि प्रथमजा ऋतस्य०स्वादिष्ठया०गायन्तित्वागाय०कस्य नूनं कतमस्यामृतानामित्यादि। अथ वायव्यं वायवे नम इति वायुमावाह्य पूजयेत॥वायो शतमिति धूम्र ध्वजपताकालंभः। तव वायवृतस्पत इति पताकोच्छ्रयणम्। वायुं संपूज्य यवोदनबलिदानम्। अथोत्तरे सुप्रभतोरणाय नमः। न्यग्रोधतोरणनं यज्ञं रक्ष सर्वविघ्नान्निवारय ॥ इति पूजयेत। त्रिशूलश्रृङ्गन्तु त्वष्ट्रे नमः सवित्रेनमः विष्णवे नमः इत्यादित्यन्यासः। द्वारशाखयोः प्रत्यूषाय नमः प्रभासाय नमः इति वसुद्रयमर्चयेत्। शाखामूलस्थयोर्धान्यराश्योर्धनदश्रीप्रदनामानौ कुंभौ प्रतिष्ठाप्य पूजयेत्। अत्र सोम मावाह्य नमस्कृत्य सोमोधेनुमिति सुवर्णवर्णध्वजपताकालंभः। वयं सोमेति तोरणोपरि निधानम् आप्यायस्वेति प्रेयङ्गवबलिदानम्। शन्नोदेवीरित्यथर्ववेदं पूजयेत्। सुवर्णनयनोयर्वानुष्टुप्छन्दः पुरंदरः। वेदो वैतानगोत्रस्तु ऋत्विक्त्वं मे मखे भव ॥ इति तद्ध्यानम् । तत्र—अथर्वाङ्गिरसं चैव अथर्वाशिरसं

१ नन्त्यायामीति । २ नन्दं । ३ आनोनियुद्भिर्गिनि । ४ द्वादेगंतल्पे ।

तथा । शांत्यध्यायं च पठेत् ॥ अथैशान्याम्—ईशानायनम इतीशानमावाह्य पूजयेत् । नमः शंभवा येति रक्तध्वजपताकालंभः । तमीशानमित्युच्छ्रयः । कद्रुद्रायेति गावेधुकबलिः । ईशानपूर्वयोर्मध्ये कलशे अनंताय नम इत्यनन्तमावाह्य पूजयेत्।नमोस्तु सर्पेभ्य इति मेघवर्णध्वजपतकालंभः।तद्विष्णोरि त्युच्छ्रयः । विष्णोर्नुकमिति बलिदानम् । पश्चिमनिर्ऋतिमध्ये कलशे ब्रह्मणे नम इत्यावाह्य पूजयेत् । यद्देवादेवहेडनमिति रक्तध्वजपताकालंभः । ब्रह्मजज्ञानमित्युच्छ्रयः । सनोभुवनस्यपत इति पायसब लिदानम् । प्राच्यां गणानांत्वेति गणेशं संपूज्य नमोस्तु रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्ष इति मण्डपाद्ब हिर्दिग्विदिक्षु रुद्रान्संस्थाप्य तेभ्यो बलिं दद्यात् । ये केचित्त्विह लोकेषु आगता बलिकांक्षिणः । तेभ्यो बलिं प्रयच्छामि नमस्कृत्य पुनः पुनः ॥ इतीशान्यां सर्वेभ्यो भूतेभ्यो नम इति बलिं दत्त्वाऽऽचामेत् । इतिमण्डपपूजा ॥ अथ गुरुर्महावेद्यां सर्वतोभद्रदेवतादानमयूखोक्तसामान्यप्रयोगोक्ता आवाह्य संपूज्य स्वकुण्डेऽग्निं स्थापयेत् । ततः सर्वेपि होतारस्तमेवाग्निं स्वस्वकुण्डे प्रणयेयुः । ततो गुरुः प्रासादान्त रीशान्यां नैर्ऋत्यां वा हस्तमितवेद्यां चतुःषष्टिपदे वास्तुपीठे सामान्यप्रयोगोक्ताः शिख्यादिदेवता

१ कलशे ।

आवाह्य सम्पूज्य ताभ्यां बलिं दत्त्वा कुण्डेषु स्वस्वशाखीयगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य आघारावाज्यभागान्तं कृत्वा होतारः प्रतिदेवतमष्टो-
त्तरशतमष्टाविंशतिमष्टौ वा प्रत्येकं समित्तिलाज्यैः कुण्डसंख्यया विभज्य जुहुयुर्नाममंत्रैः ॥ ततः
वास्तोष्पते प्रतिजानीहीति मंत्रचतुष्टयेन समित्तिलाज्यैः प्रतिद्रव्यमष्टोत्तरशतं पूर्ववद्धुत्वा ततः पञ्च
संख्यया पञ्चविंशतिसंख्यया वा बिल्वैस्तद्बीजैर्वा वास्तोष्पत इति चतसृभिर्वास्तोष्पतेध्रुवास्थूणामिति
च हुत्वा अपारंभ्योऽथपारेभ्य इत्याज्येनाष्टोत्तरसहस्रमष्टोत्तरशतं वा वास्तुममसंधानाय जुहुयुः ।
ततो रक्षोघ्नपावमानसूक्ताभ्यां त्रिसूत्र्या प्रासादं संवेष्ट्य परितो जलदुग्धयोः पृथगविच्छिन्ने धारे
दत्त्वा पीठे पूजितां हैमीं वास्तुप्रतिमां दधिदूर्वासप्तधान्यशैवालगंधाक्षतपुष्पयुतेऽपक्वमृद्भाण्डे संस्थाप्य
तत्पिधाय चतुःषष्टिधा भाजितप्रासादाग्नेयकोणपदादुत्तरे आकाशपदे जानुमात्रं गर्तं कृत्वा जलेनापूर्य
गंधपुष्पाणि प्रक्षिप्य मृद्भाण्डं तत्र निधाय गर्तं तन्मृदैव पूरयेत् मृदि आधिक्यं परं शुभम् । इत्थं वास्तु
पूजां कृत्वा गुरुर्मण्डपेशानभागे वेद्यां ग्रहानधिदेवताः प्रत्यधिदेवताविनायकादीन्पञ्चलोकपालांश्च
दानमयूखोक्तप्रकारेणावाह्य पूजयेत् । ततः ऋत्विजः समिच्चर्वाज्यैः अष्टोत्तरसहस्राष्टोत्तरशताष्टाविंश

१ ईशान्यां कलशं नभ्याश्च तदुपरि । २ उदुंबरसमिन् ।

त्यष्टान्यतमसंख्यया कुण्डेषु विभज्य हुत्वा विश्वकर्मन्नित्याज्येन हुत्वा बलीन्दत्त्वा पूर्णाहुतिं जुहुयुः। एतन्मंत्रप्रकारादिकं दानमयूखे सामान्यप्रयोगे उक्तम्। अथ गुरुः स्नानमण्डपे ॐ नमो नारायणायेत्यभिमंत्रितेन पञ्चगव्येन भूमिं वेदिकात्रयं च संप्रोक्ष्य तत्र दक्षिणवेदिकायामास्तृतवालुकायामक्षतैः स्वस्तिकं लिखित्वा तत्र विश्वकर्मणो वा ध्यानम्—विश्वकर्मा तु कर्तव्यः श्मश्रुलो मांसलाधरः। संदंशपाणिर्द्विभुजस्तेजोमूर्तिः प्रतापवान्॥ इति ध्यात्वा सप्तधान्योपरि भद्रपीठं निधाय वेदिकायाः पश्चाद्वारिपूर्णान्सपल्लवान् षट्कलशान् मृत्पल्लववृक्षीयकषायगोमूत्रगोमयभस्मगन्धोदकैः प्रपूर्यअपरान् पञ्च गन्धजलेनापूर्योदक्संस्थपंक्तिरूपेणासादयेत्। तत्रांत्यस्थपातिकलशः भद्रपीठयुतमध्यमवेदिपश्चिमेऽप्येवं स्थपतिकलशातिरिक्ता एकादश भद्रपीठयुतोत्तरवेद्यास्तु परितोऽष्टौ कलशान् पूर्वादिक्रमेण क्षारोदकक्षीरदधिसर्पिरिक्षुरससुरास्वादूदकगर्भोदकयुतान् हिरण्यगर्भाद्यैरष्टभिर्मन्त्रैर्विन्यसेत्

१ हिरण्यगर्भः सम०। २ यः प्राणतोनि०। ३ ब्रह्मजज्ञान०। ४ सबुध्निया०। ५ मही द्यौः पृ०। ६ उपश्वसयपृथि०। ७ अग्नेनय सुपथा। ८ यातेअग्ने०।

ततोऽन्ये च वेद्याः पश्चिमभागे मृत्तिका—गोमय-गोमूत्र-भस्म-मिलितपञ्चगव्य-क्षीर-दधि-घृत-मधु शर्करायुताः दशकलशाः पञ्चदश शुद्धजलकलशाः । अथान्यानेकात्रिंशत्कलशानासादयेत् । तत्र द्वयोः शुद्धजलं एकस्मिन् पञ्चामृतं पञ्चसु जलमेकस्मिन्सुगंधिजलम् एकस्मिन्पंचपल्लवकषायः एकस्मिन्सर्वौषध्यः दशक्रमात्पुष्पैः फलैः सौवर्णजलेन गोशृंगोदकेन धान्यैः सहस्रच्छिद्रैः सर्वौषधिभिः पञ्चपल्लवैस्तीर्थोदकैर्नवरत्नैर्युताः कार्याः अवशिष्टेषु दशसु कलशेषु कदंबशाल्मलीजंब्वशोकप्लक्षचूतवटविल्वनागकेसरपलाशपल्लवान् क्रमेण निक्षिप्य शुद्धजलमापूर्य लोकपालानावाहयेत् सर्वेष्याकलशेष्वित्यनेन स्थाप्याः सूक्ष्मवस्त्रं सुगंधितैलं यवशालिगोधूममसूरिकाविल्वचूर्णमुद्वर्तनार्थम् आमलकचूर्णं सुगंधियक्षकर्दमं जटामांसीं चासादयेत् । ततश्चतुरो मंगलकलशानेकं वा स्थापयेत् । तदंते तीर्थोदककलशे-सर्वे समुद्राःसरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः॥इत्यादितीर्थान्यावाहयेत्।ततः सयजमान आचार्यो मूर्तिस्थपतिभ्यां सह सुमंगलघोषं कर्म कृत्वा कुटीं गत्वा भूमावुपलिप्य विधिवदाग्नि

१ अष्टपलमिता । २ मुष्टिपरिमितम् । ३ शातिकलशोपम् ।

स्थापयित्वा प्रतिमानिर्माणे प्राणिवधादिदोषनिरासार्थं घृतेन तिलैर्वा होमं करिष्ये इति संकल्प्याज्यभागान्तं कृत्वा देवमंत्रेणाज्याहुतिशतद्वयं हुत्वा पूर्णाहुतिं च कृत्वा प्रतिमां कुशैः संमार्ज्य मधुघृताभ्यङ्गेन देवस्य व्रणभङ्गं कृत्वा संपूज्य पंचगव्येन पृथक् पृथक् स्नापयित्वा पुनः संपूज्य शिल्पिपूर्वकल्पितं कलशं सरत्नं सहिरण्यं सवस्त्रं देवपुरतो निधाय-मृदा गोमयेन गोमूत्रेण भस्मना क्षीरेणेति त्रिविक्रमः।जलान्तरितेन स्नापयित्वा पुनः संपूज्य शंखनादेन रथादिना देवं महामन्डपप्रादक्षिण्येन स्नानमण्डपमानयेत् । तत्र गुरुर्दक्षिणवेद्यां भद्रंकर्णेभिरिति प्राङ्मुखं देवं भद्रासने निवेश्य पूर्वकल्पितषट्कलशेष्वंत्यं स्थपतिकलशं हिरण्यादिसहितं देवसमीपे निधाय—काशीकुशस्थली मायावंत्ययोध्या मथोःपुरी। शालग्रामं सगोकर्णं नर्मदा च सरस्वती ॥ तीर्थान्येतानि कुम्भेऽस्मान्विशन्तु ब्रह्मशासनात् । झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा ॥ आगच्छतु सरिज्ज्येष्ठा गंगा पापप्रणाशिनी । नीलोत्पलदलश्यामा पद्महस्तांबुजेक्षणा ॥ आयातु यमुना देवी कूर्मयानस्थिता सदा । प्राचीसरस्वती पुण्या पयोष्णी गोमती तथा ॥ ऊर्मिला चन्द्रभागा च सरयूर्गण्डकी तथा । जंबूका च शतद्रुश्च कालिङ्गा सुप्रभा तथा । वितस्ता च विपाशा च शर्मदा च पुनःपुनः । गोदावरी महावर्ता शर्करावर्तमार्जनी । कावेरी कौशिकी चैव तृतीया च

महानदी।विटंका प्रातिकूला च सोमनंदा च विश्रुता।करतोया वेत्रवती देविका वेणुका च या।आत्रेयगंगा वैतरणी काश्मीरी ह्लादिनी च या॥पुष्पावती च शवत्रासा कल्माषाशंसिनी तथा । वसिष्ठा च अपापा च सिंधुवत्यारुणी तथा ॥ ताम्रा चैव त्रिसंध्या च तथा मंदाकिनी परा । तैलकाली च पारा च दुंदुभी नकुली तथा॥नीलगंधा च वोधा च पूर्णचंद्रा शशिप्रभा।अमरेशं प्रभासं च नैमिषं पुष्करं तथा।आषाढिं डिंडिभारत्नं भारभूतं वलाकुलम्। हरिश्चन्द्रं परं गुह्यं गुह्यं मध्यमकेश्वरम् । श्रीपर्वतं समाख्यातं जलेश्वरमतःपरम् । आम्रातकेश्वरं चैव महाकालं तथैव च । केदारमुत्तमं गुह्यं महाभैरवमेव च । गयां चैव कुरुक्षेत्रं गुह्यं कनखलं तथा । विमलं चन्द्रहासं च माहेन्द्रं भीममष्टकम् । वस्त्रादं रुद्रकोटीं च अविमुक्तं महालयम् ॥ गोकर्णं भद्रकर्णं च महेशस्थानमुत्तमम् । छागलाह्वं द्विरण्डं च कर्कोटं मंडलेश्वरम् ॥ कालञ्जरवनं चैव देवदारुवनं तथा । शङ्कुकर्णं तथैवेह स्थलेश्वरमतः परम् । एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः । तानि सर्वाणि कुंभेऽस्मिन् विशंतु ब्रह्मशासनात् ॥ इति मंत्रेण तत्र तीर्थान्यावाह्य देवं स्नपयेत् । यजमानश्चाशिल्पिवर्गं यथाशक्ति पूजयेत् । ततो गुरुर्बहिर्निर्गत्य सिद्धार्थघृतपायसैर्द्वयंवकमिति प्रागादिदिक्षु बलिं दत्त्वाचम्य देवसमीपमागत्य त्रातारमिन्द्रमित्यादिदशलोकपालमंत्रैर्मण्डपा

न्तर्दिक्षु रक्षां कृत्वा देवस्याग्रे चतुरो ब्राह्मणानुपवेश्य स्वस्ति वाचयित्वा तेभ्यश्च दक्षिणां दत्त्वाशिषो गृहीत्वा गुरुर्देवं स्नपयेत् । अग्निर्मूर्धेति मृदा यज्ञा यज्ञाय इति कषायैः गायत्र्या गोमूत्रेण गंधद्वारामिति गोमयेन मानस्तोक इति भस्मना तत्सवितुरितिगंधतोयेन । ततः पंचकलशैः पंचदैवत्यैः नमः शंभवे इतिप्रथमेन हंसः शुचिषदिति द्वितीयेन याते रुद्रेति तृतीयेन विष्णोरराटमसीति चतुर्थेन ब्रह्मजज्ञान मिति पंचमेन संस्नाप्य॥ शतं जीव शरदो वर्द्धमान इति दूर्वाक्षतपुष्पैः संपूज्य वस्त्रेणाच्छाद्य द्वितीयवेद्यां भद्रंकर्णेभिरिति भद्रासनं विधायास्तीर्णं बर्हिरुपनो याहि वीतय इति प्रागग्रान्कुशानास्तीर्य तत्र प्रणवेन देवं निधाय प्राङ्मुखो भूत्वा कुङ्कुमाक्तेन सूत्रेण लिङ्गमावेष्ट्य प्रतिमायां मुखे लिङ्गस्य च नेत्राणि सुवर्णशलाकया चित्रं देवानामित्यर्धर्चेन कल्पयेत् । ऊर्ध्वाधः पृथग्भूतं पक्ष्मपुटद्वयं च आकृष्णेनाति कल्पयेत् नेत्रमध्ये त्रिभागेन कनीनिकामपि कल्पयेत् । तदा न काश्चित्पुरत स्तिष्ठेत् । सुवर्णं पायसं भक्ष्यं भोज्यमादर्शं च शीघ्रं दर्शयेत् । ततः शिल्पी लोहेनोल्लिखेत् गुरुर्मधुस र्पिर्भ्यामभ्यज्येमंमेगंगइतिमंत्रेणाभ्युक्ष्य पुनर्मृदाद्येकादशकलशैः स्नापयेत् । प्रतिमाबहुत्वे मृदादिकल

१ शमवायेतिवा । २ पूर्वोक्तमन्त्रैः ।

शोदकं किंचित्स्थापयित्वा तासां नेत्रेषूल्लिख्य तेन स्नापयेत् । यजमानः सुवर्णशलाकास्नानवस्त्रादिकं च शिल्पिने दत्त्वा साहिरण्यां गां गुरवे दद्यात् । गुरुरुत्तरस्यां वेद्यां भद्रासने भद्रमिति देवं स्थापयित्वा । कलशेन समुद्रज्येष्ठा इति संस्नाप्य सम्पूज्य दूर्वाक्षतान्मूर्ध्नि दत्त्वा प्रार्थयेत्--नमस्तेऽचें सुरेशानि प्रकृते विश्वकर्मणः । प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः ॥ त्वयि सम्पूजयामीशं नारायणमनामयम् । रहिताशेषदोषैस्त्वं ऋद्धियुक्ता सदा भव ॥ इति । ततो देवस्य दक्षिणहस्ते प्रतिमावितास्तिमात्रमूर्णासूत्रं कनिक्रददितिमंत्रेण बध्नीयात् । सर्वसत्त्वमयं शान्तं परब्रह्म सनातनम् । त्वामेवालंकरिष्यामि त्वं वंद्यो भव ते नमः ॥ इति पठित्वा चतुर्भिः कलशैः स्नापयेत् । इदमापः प्रवहतेत्याद्येन-आपोदेवीरिति द्विती येन-इमंमेगंगइतितृतीयेन-तत्त्वायामीतिचतुर्थेन-अग्निर्मूर्धादिवेत्यष्टपलमृत्तिकाकलशेन-समुद्रज्येष्ठाइति शुद्धोदककलशेन-गंधद्वारामिति सप्तपलमितगोमयकलशेन-वरुणस्योत्तंभनमसीति शुद्धोदकेन-तत्स वितुरितिद्वादशपलगोमूत्रकलशेन-आपोहिष्ठेतिशुद्धोदकेन-प्रसद्येतिमुष्टिसंमितभस्मकलशोदकेन-योवः

१ पचदशांतर्गतेन । २ पञ्चदशशुद्धजलकलशांतर्गतैः । ३ मृदादिदशकलशांतर्गताद्यकलशेन । ४ पञ्चदशशुद्धोदककलशांतर्गतेन षष्ठेन अत्र सर्वत्र शुद्धजलस्नान सप्तादिक्रमेण ज्ञेयम् ।

शिवतमोरसइति शुद्धोदकेन-पयः पृथिव्यामितित्रिपलसंमितपंचगव्यकलशेन-देवीरापःसंमधुमतीमंधुमतीभिः सृज्यध्वं इति शुद्धोदकेन-आप्यायस्वेतिषोडशपलक्षीरकुंभेन-तस्मा अरंगमामव इतिशुद्धोदकेन दधिक्राव्णइति विंशतिपलदधिकुंभेन-युंजान इत्युदकुंभेन-घृतवतीभुवनानामितिसप्तपलघृतकुंभेन देवस्य त्वेति जलेन-मधुवाता इति त्रिपलमधुकुंभेन-आपो अस्मानिति जलेन-आयंगौरि तित्रिपलशर्कराकुंभेन-आपोहयद्बृहतीरित्युदकेन प्रक्षाल्य । यज्ञायज्ञायइतिवस्त्रेण संमार्ज्य सुगन्धतैलेनाभ्यज्य द्रुपदादिवेति यवशालिगोधूममसूराबिल्वचूर्णैरुद्वर्त्य यातेरुद्र शिवा तनूरिति आमलकचूर्णेन यक्षकर्दमेन प्रजाभूतेतिलिंपेत् । यक्षकर्दमस्तु-कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुंकुमस्य च । चन्दनस्य त्रयो भागाः शशिनस्त्वेक एवहि ॥ इत्युक्तः । ततो जटामांस्यानुलिप्य मानस्तोके प्रतद्विष्णुरिति कलशद्वयेन स्नापयित्वा अपाम सोमममृता अभूमेति पञ्चामृतेन-अयं राजा वरुणोनुमन्यतां १ यथाविप्रस्य० २ संतपयाशसि० ३ आप्यायस्वामिदन्तमसोम० ४ अश्वग्रेक्षाधिष्ठवसौ० ५ इति पञ्चभिः शुद्धजलपूरितकलशैः क्षालयेत् । गंधद्वारामितिगंधोदकेन-यज्ञायज्ञाय इतिपञ्चपल्लवकषायकलशोदकेन या ओषधीःपूर्वाजाता इत्योषधिकलशेन-ओषधीःप्रतिमोदध्वमिति पुष्पकलशोदकेन-याः फलिनीरित्य

घ्रफलकलशोदकेन-हिरण्यगर्भइतिसुवर्णोदकेन-हविष्मतीरिति शृङ्गोदकेन-धान्यमसीति धान्योदकेन सहस्राक्षेणेतिसहस्रधारकलशेन-यादिव्याइतिसर्वौषधिजलेन-नमोस्तुसर्पेभ्य इति पंचपल्लवोदकेन-अष्टौ व्यख्यत्ककुभःपृथिव्या इतिरत्नोदकेन-इमंमेगंगेइति तीर्थोदकेन। पुनरष्टाभिः कलशैः पूर्वकल्पितैः समुद्रसंज्ञितैः स्नापयेत्। कयानश्चित्रइतिक्षारोदकेन-आप्यायस्वसमेत्विातेक्षीरकुंभेन-दधिक्राव्ण इति दध्नः-घृतवतीभुवनानामितिघृतस्य-पयः पृथिव्यामितीक्षुरसस्य-देवंबर्हिरितिसुरोदकस्य-स्वादिष्ठयेति स्वादूदकस्य-सरस्वतीयोन्यामिति गर्भोदकस्य। पुनर्दशाभिः पल्लवैर्लोकपालकलशैः स्नापयेत्। तत्र त्रातारमिन्द्रमिति कदंबपल्लवकुंभोदकेन-त्वन्नो अग्ने वरुणस्य विद्वानिति शाल्मलीपल्लवेन सुगंनः पन्थामभयं कृणोत्विति जम्बूपल्लवेन-असुन्वंतमयजमानामिति अशोकपल्लवेन-तत्वायामीतिप्लक्षेण-वायोयेतेसहस्रिणइतिचूतपल्लवेन-वयःसोमेति वटपल्लवेन-तमीशानमितिबिल्वपत्रेण-नमोस्तुसर्पेभ्य इति नागकेसरपल्लवेन-ब्रह्मजज्ञानमितिपलाशपल्लवेन। ततः सुमंगलघोषैः कनिक्रददिति चतुर्भिः कुंभैः एकेन वा कुंभेन देवं स्नापयित्वा सुगंधिना सितवस्त्रेण परिमृज्य विश्वतश्चक्षुरितिसंकलीकृत्य देवमावाहयेत्। एह्येहि भगवन्विष्णो लोकानुग्रहकाम्यया। यज्ञभागं गृहाणेमं

वासुदेव नमोऽस्तु ते ॥ हिरण्यवर्णामिति पाद्यम् ॥ हिरण्यवर्णाः शुचयइत्यर्घ्यम् । विभ्राड्बृहत्पिबत्वित्याचमनीयम् । त्र्यंबकमिति चंदनम् । अभिवस्त्रेति वस्त्रम् । वेदाहमेतंपुरुषमित्युपवीतम् । तेनैव उत्तरीयं च । इदंविष्णुरिति पुष्पम् । धूरसि धूर्वेतिधूपम् । चन्द्रमामनस इति दीपम् । अन्नपतेन्नस्येतिनैवेद्यम् । आचमनं पुष्पांजलिं दत्त्वा प्रार्थनां कृत्वा स्नानवस्त्रनैवेद्यादिकं शिल्पिने दद्यात् ॥ इतिदेवस्नपनाविधिः । अथ देवं पुरुषसूक्तेन स्तुत्वा । उत्तिष्ठोत्तिष्ठगोविंद त्यज निद्रां जगत्पते । त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् ॥ इति तमुत्थाप्य रथमारोप्य मंगलघोषेण कनिक्रददिति सूक्तेन च प्रासादप्रादक्षिण्येनानीय यागमंडपपश्चिमद्वार्याकृष्णेनेति मंत्रेण प्रवेश्य वेद्याः पश्चिम भागे प्राङ्मुखमुपवेश्य मधुपर्कं कुर्यात् । ततो वेद्यां कुशानास्तीर्य तदुपरि शय्यामास्तीर्य वेद्याः पूर्वादिदिक्षु विष्णुमधुसूदनत्रिविक्रमवामनान्आग्नेयादिकोणेषु श्रीधरहृषीकेशपद्मनाभदामोदरांश्च पूजयेत् । ॐ नमोनारायणायेति मंत्रेण विष्णुं शय्यायां निवेशयेत् । शिवादिप्रतिष्ठायां तु नमः शंभवायेति शय्यायां निवेश्य भवं शर्वमीशानं पशुपतिं रुद्रमुग्रं भीमं महान्तं च पूर्वादिक्रमात्पूजयेत् । ततः शय्यायां देवं स्वापयित्वा त्रिभिर्वस्त्रैर्देवमाच्छाद्य देवस्य शिरोदेशभूमौ सहिरण्यं निद्राकलशम्

अपोदेवीरुपहूय इति प्रतिष्ठाप्य ॐआप्यायस्व समिति मधुसर्पिर्भ्यां देवमभ्यज्य यातेरुद्रेति तैलसर्षपैरुप लिप्य गंधादिनाभ्यर्च्य बृहस्पतेपरिदीयेति सितं परिसरं दद्यात् । अत्र वा बृहस्पते परीतिमंत्रेण देवस्य कंकणबंधनमित्येके ॥ ततो देवस्य पादनाभिवक्षःशिरस्सु विश्वतश्चक्षुरित्यालभनम् । ततस्तद्दक्षिण पार्श्वे छत्रं व्यजनं चामरं च चरणदेशे पादुके पार्श्वयोः शांतिकुंभौ आसनदर्पणघंटाभक्ष्यभोज्यजलपात्रादिकं च देवस्य पुरतः स्थापयेत् । ततो भस्मदर्भतिलैर्देवस्य परितो रक्षार्थं प्राकारत्रयं कृत्वा मंडपाद्बहिर्गत्वा प्रतिदेशं लोकपालेभ्यो गंधादिपूर्वकं बलिंदद्यात् भूतेभ्यश्चत्र्यंबकमिति।बलिमंत्रस्तु पूर्वदिग्वासिभ्योदिक्पातिदिग्भूताधिपतिदिग्रुद्रादिङ्मातृदिक्क्षेत्रपालेभ्योनमःइत्येवंप्रतिदिशम् । ततआचम्य होमंकुर्यात् । तद्यथा ॐपरायविष्णवात्मनेस्वाहेतिविष्णवे । अन्यदेवतायां शिवात्मनेइत्याद्यूहः।अनेनाष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिमष्टौवातिलैर्यवैर्वाप्रत्येकंहुत्वाप्रतिमायांन्यासान्कुर्यात्। अ पादयोः उ हृदये म ललाटे इति प्रणवंन्यसेत्।भूःपादयोःभुवःहृदये स्वःललाटे इति व्याहृतीर्न्यसेत्।अ तालुके आ मुखे इ दक्षिणनेत्रे ईवामनेत्रे उ दक्षिणश्रवणे ऊवामश्रवणे ऋ दक्षिणगण्डे ॠवामगण्डे ऌ दक्षिणनासापुटे ॡ वामनासापुटे ए ऊर्ध्वदशनेषु ऐअधोदशनेषु ओऊर्ध्वोष्ठे औअधरोष्ठे अंललाटे अःजिह्वायां य त्वचि र

निरुक्ताय॰ हृदये छन्दःशास्त्रेभ्यो॰ज्योतिःशास्त्रेभ्यो॰ नेत्रयोः गीताशास्त्रेभ्यो॰ भूतशास्त्रेभ्यो॰ श्रोत्रयोः आयुर्वेदाय॰दक्षिणभुजे धनुर्वेदाय॰ वामभुजे योगशास्त्रेभ्यो॰ हृदये नीतिशास्त्रेभ्यो॰ पादयोः वश्यतन्त्राय॰ओष्ठयोः॥ इतिविद्यान्यासः। दिवे॰मूर्ध्नि सूर्यलोकाय॰चन्द्रलोकाय॰नेत्रयोः अनिललोकाय॰घ्राणे व्योम्ने॰नाभ्यां समुद्रेभ्यो॰वास्तिदेशे पृथिव्यै॰ पादयोः इतिवैराजन्यासः। हिरण्यगर्भाय॰ शिरसि कृष्णाय॰ केशेषु रुद्राय॰ललाटे यमाय॰ भृकुट्याम् अश्विभ्यां कर्णयोः वैश्वानराय॰ मुखे मरुद्भ्यो॰घ्राणे वसुभ्यो॰कण्ठे रुद्रेभ्यो॰दन्तेषु सरस्वत्यै॰जिह्वायाम् इन्द्राय दक्षिणभुजे बलये॰वामभुजे। प्रह्लादाय॰ दक्षिणस्तने विश्वकर्मणे॰ वामस्तने नारदाय॰ दक्षिणकुक्षौ अनन्तादिभ्यो॰ वामकुक्षौ वरुणाय॰ हस्तयोः मित्राय॰ पादयोः विश्वेभ्योदेवेभ्यो॰ ऊरुमध्ये॰ पितृभ्यो॰ जानुमध्ये यज्ञेभ्यो॰ जंघयोः राक्षसेभ्यो॰गुल्फयोः पिशाचेभ्यो॰ पादयोः असुरेभ्यो॰पादाङ्गुलीषु विद्याधरेभ्यो॰ पार्ष्ण्योः ग्रहेभ्यो॰ पादतलयोः गुह्यकेभ्यो॰ गुदे पूतनादिभ्यो॰ नखेषु गन्धर्वेभ्यो॰ ओष्ठयोः कार्तिकेयाय॰ गणेशाय॰ कटिपार्श्वयोः ॥ इति देवयोनिन्यासः। मत्स्याय॰ मूर्ध्नि कूर्माय॰ पादयोः नृसिंहाय॰ ललाटे वराहाय॰ जङ्घयोः वामनाय॰ मुखे परशुरामाय॰ हृदये रामाय॰ बाहुषु कृष्णाय॰ नाभ्यां

बौद्धाय० बुद्धौ कल्किने० जानुनि । केशवाय० शिरसि नारायणाय० मुखे माधवाय०ग्रीवायां गोविन्दाय० बाह्वोः विष्णवे० हृदये मधुसूदनाय० पृष्ठे त्रिविक्रमाय० कट्यां वामनाय० जठरे श्रीधराय० हृषीकेशाय० जङ्घयोः पद्मनाभाय० गुल्फयोः दामोदराय० पादयोः ॥ इति मूर्तिन्यासः । अश्वमेधाय० मूर्ध्नि नरमेधाय० ललाटे राजसूयाय० मुखे गोसवाय० कण्ठे द्वादशाहाय० हृदि अहीनेभ्यो० नाभौ सर्वजितेभ्यो०दक्षिणकट्यां सर्वमेधाय०वामकट्याम् अग्निष्टोमाय०लिङ्गे अतिरात्राय०वृषणयोः आप्तोर्यामाय० ऊर्वोः षोडशिने० जान्वोः उक्थाय दक्षिणजङ्घायां वाजपेयाय० वामजङ्घायाम् अत्यग्निष्टोमाय० दक्षिणबाहौ चातुर्मास्याय० वामबाहौ सौत्रामण्यै० हस्तेषु । पाश्विष्टिभ्यो० अङ्गुलीषु । दर्शाय० पौर्णमासाय० नेत्रयोः । सर्वेष्टिभ्यो० रोमकूपेषु । स्वाहाकाराय० वषट्काराय० स्तनयोः । पञ्चमहायज्ञेभ्यो० पादाङ्गुलीषु । आहवनीयाय० मुखे । दक्षिणाग्नये० हृदये । गार्हपत्याय० नाभौ० । वेद्यै० उदरे । प्रवर्ग्याय० भूषणेषु । सवनेभ्यो० पादयोः । इध्मेभ्यो० बाहुषु । दर्भेभ्यो० केशेषु । इति क्रतुन्यासः ॥ अथ मूलमन्त्रन्यासः आयुधन्यासः शक्तिन्यासः अङ्गन्यासः इति साधारणाः सर्वत्र वैष्णवमधिकृत्य तूच्यन्ते । धर्माय० मूर्ध्नि । ज्ञानाय० हृदि । वैराग्याय० गुह्ये । ऐश्वर्याय० पादयोः ॥

इति गुणन्यासः॥खड्गाय० शिरसि। शार्ङ्गाय० मस्तके। मुसलाय० दक्षिणभुजे। हलाय० वामभुजे। चक्राय० नाभ्यां जठरे पृष्ठे च। शङ्खाय० लिङ्गे वृषणेच। गदायै० जङ्घयोः जानुनोश्च। पद्माय०। गुल्फयोः पादयोश्च। वज्राय० शक्तये० दण्डाय० खड्गाय० पाशाय० ध्वजाय० अंकुशाय० त्रिशूलाय० चक्राय० पद्माय० इति शिवे इत्यायुधन्यासः॥ लक्ष्म्यै० ललाटे। सरस्वत्यै० मुखे। रत्यै० गुह्ये। प्रीत्यै० कण्ठे। कीर्त्यै० दिक्षु। शान्त्यै० हृदि। तुष्ट्यै०जठरे। पुष्ट्यै०सर्वत्र इति शक्तिन्यासः॥ मूलमन्त्रस्य॥ ॐ हृदये नमः शिरसि भगवते० शिखायां वासुदेवाय कवचं सर्वत्र वौषट् नेत्रे० फट् करयोः अस्त्रं० दक्षिणवामस्तनयोः श्रीवत्साय० उरसि कौस्तुभाय० कण्ठे वनमालायै०॥ इत्यंगन्यासः॥ ॐ पादयोः न जानुनोः मो गुह्ये भ नाभ्यां ग हृदये व कण्ठे ते मुखे वा नेत्रयोः सु भाले दे मूर्ध्नि वा दक्षिणपार्श्वे य उत्तरपार्श्वे॥ इति द्वादशाक्षरन्यासः। प्रतिमायां जीवन्यासः। तत्र तेजो भावयित्वा बुद्धीन्द्रियकर्मेन्द्रियमनःप्राणपंचकाहंकारतन्मात्रादिकं सर्वं संयोज्य पुरुषभावं भावयित्वा सर्वसाक्षिणं च भावयित्वा तत्र तत्त्वत्रयं न्यसेत्। तद्यथा—आत्मतत्त्वाय० आत्मतत्त्वाधिपतये ब्रह्मणे नम पादयोः विद्यातत्त्वाय० विद्यातत्त्वाधिपतये विष्णवे० हृदये शिवतत्त्वाय० शिवतत्त्वाधिपतये रुद्राय०

शिरसीति ॥ अथ गायत्रीन्यासः सूर्यस्यात पादाङ्गुष्ठयोः त्स गुल्फयोः वि जङ्घयोः तु जानुनोः वॅऊर्वोः रेगुह्ये णि वृषणयोः यं कटिदेशे भ नाभौ गोंजठरे द स्तनयोः व हृदये स्य कण्ठे धी वदने म तालुदेशे हि नासिकाग्रे धि चक्षुषोः यो भ्रमध्ये यो ललाटे नः पूर्वदिशि प्र दक्षिणादिशि चो पश्चिमदिशि द उत्तर दिशि या मूर्ध्नि त्सवंत्र तत्सावतुर्हृदये वरेण्यं शिरसि भर्गोदेवस्य शिखायां धीमहि कवचे धियो योनः नेत्रयोः प्रचोदयात् अस्त्रे ॥ इति गायत्रीन्यासः । अग्निमीळे० पादयोः । इषेत्वा गुल्फयोः । अग्नऽआयाहि० जंघयोः । शन्नः जान्वोः । बृहद्रथंतरे ऊर्वोः । स्वस्तिनः० जठरे । दीर्घायुत्वाय० हृदये । श्रीश्वते० कण्ठे । त्रातारं० वक्रे । त्र्यंबकेन स्तनयोर्नेत्रयोश्च । मूर्धानं० मूर्ध्नि । अथ द्वादशाक्षरेण नारायणस्य मूर्तिन्यासः । ॐ केशवाय० शिरसि । न नारायणाय० मुखे । मो माधवाय ग्रीवायाम् । भ गोविन्दाय० कण्ठे । ग विष्णवे० पृष्ठे । व मधुसूदनाय० कुक्षौ । ते त्रिविक्रमाय० कट्याम् । वा वामनाय० जङ्घयोः सु श्रीधराय० वामगुल्फे । दे हृषीकेशाय० दक्षिणे । वा पद्मनाभाय० वामपादे। य दामोदराय दक्षिणे पादे । ॐ हुं हृदयायनमः हृदये । विष्णवे० शिरसि । ब्रह्मणे० शिखायाम् । ध्रुवाय० कवचे । चक्रिणे० अस्त्रायफट् अस्त्रं हस्तयोः । नमः शंभवाय० गायत्रीं दक्षिणनेत्रे । विजयाय० सावित्रीं वामनेत्रे।चक्रिणे

चक्ररूपाय० पिङ्गलास्त्रं दिक्षु ॥ इत्यष्टाङ्गविष्णुमन्त्रन्यासः ॥ सहस्रशीर्षा० पादयोः । पुरुषएव० जङ्घयोः । एतावानस्य० जानुनोः । त्रिपादूर्ध्व०ऊर्वोः । ततो विराड्०वृषणयोः । तस्माद्यज्ञात्०कट्याम् । तस्माद्यज्ञा०नाभ्याम् । तस्मादश्वा० हृदि । तं यज्ञं०स्तनयोः । यत्पुरुषं०बाह्वोः । ब्राह्मणोस्य०मुखे । चन्द्रमामनसो०चक्षुषोः । नाभ्याआसीत्० कर्णयोः । यत्पुरुषेण० भ्रुवोः । सप्तास्या०भाले । यज्ञेनयज्ञं० शिरसि । अद्भ्यःसंभृतः० हृदये । वेदाहं० शिरसि । प्रजापतिः० शिखायाम् । यो देवेभ्यः० कवचे । रुचं ब्राह्मं० नेत्रयोः । श्रीश्चते० अस्त्रे ॥ इति पुरुषसूक्तादिन्यासः ॥ अथ शिवस्य पञ्चब्रह्मन्यासः । अङ्गुष्ठयोरीशानं तर्जन्योस्तत्पुरुषम् । मध्यमयोरघोरम् । अनामिकयोर्वामदेवम् । कनिष्ठिकयोः सद्योजातम् । ततःकनिष्ठिकयोर्हृदयम् । अनामिकयोः शिरः । मध्यमयोः शिखां । तर्जन्योः कवचम् । अङ्गुष्ठयोरस्त्रं विन्यस्य । परेण तेजसा संयोज्य कवचेनावगुण्ठ्य सर्वकर्मसु नियोजयेत् । आचमनं सर्वत्र । इत्थं देवस्य करन्यासं कृत्वा लिङ्गमुद्रां बद्ध्वा ईशानः सर्व० सदाशिवोम् इति मंत्रेण ईशानमुष्टिं बध्नीयात्। ततः अङ्गुल्यग्रैः रुद्रमुद्रया मूर्ध्नि तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । इति । एवं तर्जन्यङ्गुष्ठयोगात्तत्पुरुषं० मुखे । अघोरेभ्यो० इति मध्यमाङ्गुष्ठयोगेन हृदि ।

अघोरं० वामदेवाय नमो० मनोन्मना नमइत्युङ्गुष्ठानामिकायोगेन गुह्ये । सद्योजातं० भवोद्भवाय नमः इति कनिष्ठाङ्गुष्ठयोगेन पादादारभ्य मस्तकान्तं यावन्मूर्तिव्यापकत्वेन ब्रह्म न्यसेत् । ततः ईशानः सर्वविद्यानामिति शशिनमुपरितनमूर्ध्नि । ईश्वरः सर्वभूतानामिति कलिपतचन्द्रोदयदलं मूर्ध्नि पूर्वे । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्म नम इति इष्टां दक्षिणमूर्ध्नि । शिवो मे० अस्तु नम इति मरीचिमुत्तरमूर्ध्नि । सदाशिवों नम इति ज्वालिनीं पश्चिममूर्ध्नि ॥ ततः तत्पुरुषाय विद्महे नम इति पूर्ववक्त्रे शान्तिम् । महादेवाय धीमहीति दक्षिणवक्त्रे विद्याम् । तन्नोरुद्र इत्युत्तरवक्त्रे प्रतिष्ठाम् । प्रचोदयादिति पश्चिमवक्त्रे धृतिमितितत्पुरुषकलाचतुष्टयन्यासः ॥ ततः अघोरेभ्य इति क्षमां हृदये । अथघोरेभ्यो नम इति रजामुरसि । घोरजरायै स्कन्धयोः। घोरतरेभ्यो निद्रायै नाभौ । सर्वेभ्यः सर्वव्याध्यै कुक्षौ । सर्वशर्वेभ्यः मृत्यवे० पृष्ठे । नमस्ते अस्तु क्षुधायै० वक्षसि । रुद्ररूपेभ्य स्तृषायै० उरसि । इत्यष्टावघोरकालाः।वामदेवाय नम इतिरजां गुह्ये । ज्येष्ठाय नम इति रक्षां लिङ्गे । श्रेष्ठाय नम इति रतिं दक्षिणोरौ।रुद्राय नम इति कल्पां वामोरौ।कालाय नम इति कामां दक्षिणजानौ । कलविकरणाय नम इति संजीविन्यै० वामजानौ । बलविकरणाय नमः क्रियायै० दक्षिणजंघायाम् ।

बलाय नमः वृद्धयै० वामजंघायाम् । बल छायायै० दक्षिणस्फिचि । प्रथमनाय नमः धात्रीं वामस्फिचि । सर्वभूतदमनाय नम इति भ्रामणीं कट्यां मनो नम इति पोषणीं दक्षिणपार्श्वे । उन्मनाय नम इति ज्वरां वामपार्श्वे । इति त्रयोदशकलाः । सद्योजातं प्रपद्यामि नम इति सिद्धिं दक्षिणपादे । सद्यो जाताय वै नमो नम इति ऋद्धिं वामपादे । भवे नम इति कीर्तिं दक्षिणपाणौ । अभवे नम इति लक्ष्मीं वामपाणौ । नातिभवे नम इति मेधां नासायाम् । भवस्वमां नम इतिकान्तिं शिरसि । भवे नम इति स्वधां दक्षिणबाहौ । उद्भवाय नम इति प्रभां वामबाहौ । इति सद्योजातकलाष्टकम् । ततस्तमाद्याः सर्वाः अत्र विंशतिविति कलान्तरन्यासभावनां कृत्वा मुद्राश्च प्रदर्श्य विद्यादेवं हंसं संपाद्य हंसहंसेति हृदयादिन्यासं कुर्यात्॥अथ नृसिंहे—नृसिंह उग्ररूप ज्वलज्वलप्रज्वलप्रज्वलस्वाहा॥इति मंत्रः। नारसिंही यदा स्थाप्या त्वधिवास्य निशागमे । कृत्रिमं वाथ साक्षाद्वा पशुं दत्त्वा बलिं हरेत् ॥ एवं न्यासं कृत्वा । परमेष्ठिनं नमस्कृत्य निद्रामावाहयाम्यहम् । मोहिनीं सर्वभूतानां मनोविभ्रमकारिणीम् ॥ विरूपाक्षि शिवे शान्ते आगच्छ त्वं तु मोहिनि । वासुदेवहिते कृष्णे कृष्णांबरविभूषिते ॥ आगच्छ

१ अवाहान्यादिकाः ।

सहसाजस्रसुप्तं संसारमोहिनि । सुषुप्स्वसंहरे देवि कुमार्यैकान्तमानसे ॥ श्रमनिश्वासवाह्यं च आगच्छ भुवनेश्वरि । तमःसत्त्वरजोपेते आगच्छत्वरिवारिणि ॥ मनोबुद्धिरहंकारः संहारस्त्वं सरस्वति । शब्द स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः॥आगच्छ गृह्य संक्षिप्य मोहपाशनिबन्धिनि । भवस्योत्पत्तिहेतुस्त्वं यावदाभूतसंप्लवम् ॥ भुवः कल्पांतसंध्यायां वससे त्वं चराचरे । भोगिशय्याप्रसुप्तस्य वासुदेवस्य शासने ॥ त्वं प्रतिष्ठासि वै देवि मुनियोनिसमुत्थित्ते । पितृदेवमनुष्याणां सयक्षोरगरक्षसाम् ॥ पशुप क्षिमृगाणां च योगमाया विवर्धिनि । वससे सर्वसत्त्वेषु मातेव हितकारिणी ॥ एहि सावित्रि मूर्तित्वं चक्षुभ्यार्स्थानगोचरे । विश नासापुटे देवि कण्ठेचोत्काण्ठताविश ॥ प्रतिभावय मां सर्वं मातृवद्देवि सुन्दरि । इदमर्घ्यं मया दत्तं पूजेयं प्रतिगृह्यताम् ॥ उपप्रागात्परमं यदितिमन्त्रोऽयं तस्याः पूजाविधेः स्मृतः ॥ निद्राकलशे निद्रां पूजयित्वा लोकपालमातृक्षेत्रपालभूतेभ्यो बलिं दत्त्वा स्थाप्य देवं शय्यातः प्राच्यां सर्वतोभद्रे पूजयेत् । विष्णुश्चेद्द्वादशारे चक्रे मध्येऽष्टदले पद्मे मूलमंत्रेण देवं निवेश-येत् । ॐ हुंहृदयायनमः । इति कर्णिकायां हृदयं पूजयेत् । विष्णवे नम इति शिरः पूर्वपत्रे । ब्रह्मण्याय नम इति शिखां दक्षिणे ध्रुवाय नम इति कवचं पश्चिमे । चक्रिणे नम इत्यस्त्रमुत्तरे । शंभवाय नम

इति गायत्रीमाग्नेयदले । विजयायनमः सावित्रीमीशानदले । ज्योतीरूपाय नमो नैर्ऋत्ये । चक्रिरूपाय नमः पिङ्गलास्त्रम् वायव्ये । इति गर्भावरणम् ॥ आसु पूर्वादिक्रमेण । केशव नारायण माधव गोविंद विष्णु मधुसूदन त्रिविक्रम वामन श्रीधर हृषीकेश पद्मनाभ दामोदर इति द्वादशमूर्तीः पूजयेत् । इति द्वितीयावरणम्॥ प्रागादितः खड्गाय० गदायै० चक्राय० शङ्खाय० पद्माय० हलाय० मुशलाय० शार्ङ्गाय० इति तृतीयावरणम् ॥ अथ मूर्तीशाः । पृथिवीमूर्तये० पृथिवीमूर्त्यधिपतये शर्वाय० अग्निमूर्तये० अग्निमूर्त्यधिपतये पशुपतये० यजमानमूर्तये० यजमानमूर्त्यधिपतये उग्राय० अर्कमूर्तये० अर्कमूर्त्यधिपतये रुद्राय० जलमूर्तये० जलमूर्त्यधिपतये भवाय० वायुमूर्तये० वायुमूर्त्यधिपतये ईशानाय० इन्दुमूर्तये० इन्दुमूर्त्यधिपतये महादेवाय० खमूर्तये० खमूर्त्यधिपतये भीमाय० इत्यष्टौ मूर्तीस्तदधिपांश्चार्चयेत् । वैष्णवे पञ्चैव मूर्तयः । तदा पूर्वे पृथिवीमूर्तये नमः पृथिवीमूर्त्यधिपतये वासुदेवाय० । दक्षिणे जलमूर्तये० जलमूर्त्यधिपतये संकर्षणाय० । पश्चिमे अग्निमूर्तये० अग्निमूर्त्यधिपतये प्रद्युम्नाय० । उत्तरे वायुमूर्तये० वायुमूर्त्यधिपतये अनिरुद्धाय० मध्ये खमूर्तये० खमूर्त्यधिपतये नारायणाय० इति । शैवे पञ्चमूर्तिपक्षे ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः पञ्चमूर्तिपाः । इन्द्रादयस्तु सर्वत्र पूज

नीयाः । ततः आचार्य्यः क्रमेण पलाशोदुम्बराश्वत्थापामार्गशमीसमिधां प्रत्येकं द्वादशसहस्रपट्त्री ण्यष्टसहस्रमष्टशतं वा हिरण्यगर्भ इति कुण्डसमीपे संस्थाप्य शान्तिकपौष्टिकैर्मन्त्रैर्यथाविभागं सकृत्विक्जुहुयात् । प्रतिकुण्डमेकैकऋत्विक्मूर्तिपास्तत्तन्मन्त्रेण पूज्याः । शन्नोवातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः । अहानि शं भवंतु नः श ँ रात्रिः प्रतिधीयतां० ॥ शन्न इन्द्राग्नी० ॥ शन्नो देवी रभि० ॥ इति शान्तिकमन्त्राः ॥ पुष्टिर्नरण्वाक्षिति० ॥ वास्तोष्पते प्रतरणो० ॥ अमीवहा० ॥ त्र्यंबकं० ॥ इति पौष्टिकाः ॥ ततो मूर्तिपाः पूर्वकुण्डे पलाशसमिधामष्टसहस्रमष्टशतं वा घृतेन तिलैर्वा अग्निमीळे० इति जुहुयुः । इषेत्वेति दक्षिणे । अग्न आयाहीति पश्चिमे । शन्नो देवीरित्युत्तरे ॥ यदाष्टौ कुण्डानि तदा ॐ वौषडित्याग्नेये । दशप्रणवान्त्सकृद्गायत्रीं चोक्त्वानैर्ऋते । जातवेदस इति वायव्ये । नमो ब्रह्मण इतीशानकुण्डे । मूर्द्धानं दिव इति पूर्णाहुतिं जुहुयुः । आहुतिसंपातान् शान्ति कलशे कुण्डसमीपस्थे पातयेयुः । ततो मूर्तिमूर्तिपलोकपालेभ्यः समिद्भिर्घृतेन तिलैर्वा अष्टसहस्रमष्ट शतं वा जुहुयुः । तेषां मन्त्रास्तु स्योनापृथिवीति पृथिवीमूर्तेः । अघोरेभ्य इति मूर्तिपतेः शर्वस्य ।

१ पूर्तकमलाकरे पूर्वाद्यष्टकुण्डेषु क्रमेण खादिरपलाशोदुंबरप्लक्षवटापामार्गाश्वत्थशमी ।

इन्द्रायेन्द्रोमरुत्वत इतीन्द्रस्य । अग्निं दूतमित्यग्निमूर्तेः । यः पशूनामित्यग्निमूर्तिपतेः पशुपतेः । अग्न
आयाहीत्यग्नेः । असिहिवीरसेन्य इति यजमानमूर्तेः । तामिन्द्रजाहवीमीति यजमानमूर्तिपतेरुग्रस्य ।
यमायसोममिति यमस्य । उदुत्यं जातवेदसमितिसूर्यमूर्तेः । आवोराजातमध्वरस्येति सूर्यमूर्तिपतेरु
द्रस्य । असुन्वतंसमंजहीतिनिर्ऋतेः।आपोहिष्ठेति जलमूर्तेः । विभूषन्नग्नउभयानितिजलमूर्तिपतेर्भवस्य ।
इमं मेवरुणेतिवरुणस्य । वातआवातुभेषजमितिवायुमूर्तेः । तमीशानमितिवायुमूर्तिपतेरीशानस्य ।
आनोनियुद्भिरितिवायोः । वयंसोमव्रत इति सोममूर्तेः । इन्द्रंतंशुम्भेतिसोममूर्तिपतेर्महादेवस्य ।
अभित्यंदेवं सवितारमितिकुबेरस्य । आदित्प्रत्नस्येतिखमूर्तेः । मृगोनभीमः खमूर्तिपतेर्भीमस्य । अभि
त्वादेवसवितरितीशानस्य । ततोऽष्टसहस्राष्टशताष्टाविंशत्यष्टान्यतमसंख्ययामहाव्याहृतिभिस्तिलय
वव्रीहिचवाज्यैः क्रमेण प्रत्येकं जुहुयुः ॥ ततो गुरुः स्थाप्यदेवतालिङ्गकेन मन्त्रेण घृतेन तिलैर्वाष्टसहस्र
मष्टशतं वा हुत्वा पूर्णाहुतिं हुत्वा देवस्य दक्षिणकर्णे होमं निवेद्य पूर्वकुंडे घृताहुत्यष्टकं मूलमंत्रेण हुत्वा

---

१ यः पशूना ९ रक्षिताविष्ठितानाप्रजापतिःप्रथमजाऋतस्य । सहस्रधामाजुषता ९ हविर्नस्वाहा । २ ॐभूरग्नये च पृथिव्यै च महते च स्वाहा ॥ ॐभुवो वायवे चान्तरिक्षाय च महते च स्वाहा ।ॐसुवरादित्याय दिवेच महते च स्वाहा।ॐभूर्भुवःसुवश्चन्द्रमसेचनक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा॥

देवपादौ स्पृशेत् । मूलमंत्रेण पूर्वोक्तसंख्यया याम्यकुण्डेहस्तेन दधि हुत्वा देवनाभिं वारुणकुण्डे क्षीरं हुत्वा हृदयम् । सौम्यकुण्डे मध्वाहुतीर्हुत्वा मूर्धानम् । वारुणकुण्डे मिश्रघृतादिचतुष्टयं हुत्वा तेनैव पूर्णां दत्त्वा देवसर्वाङ्गं स्पृशेत् । ततः कूर्मशिलाब्रह्मशिलापिण्डिकावाहनादिपरिचारकदेवांश्च वैदिकैर्नाममन्त्रैर्वा संपूज्य मुख्यप्रतिमाया वामपार्श्वेऽधिवासयेत् । तानि मधुघृतेनाभ्यज्य प्रक्षाल्य संपूज्य वस्त्रेणाच्छाद्य प्रतिमायाः पिण्डिकायां स्वमंत्रन्यासं कुर्यात् । तत्र विष्णुश्चेत्स्थाप्यस्तदा । ॐ घंढंपंभं फंलक्ष्म्यै नमः । एतानि पञ्चाक्षराणि हृच्छिरःशिखाकवचनेत्रसंज्ञकानि हुंफडन्तोवा वचनसमुदायः । इति पिण्डिकायां पञ्चाङ्गानि न्यस्य । तत्त्वत्रयमूर्तिंमूर्तिपांश्च पूर्ववद्विन्यसेत् तदा ॐह्रींश्रींह्रांक्षः परब्रह्मणे सर्वाधाराय नमः । ॐ ह्रींश्रींह्रांदिव्यतेजोधारिण्यै सुभगायै नमः इति मन्त्राभ्यामधिवासयेत् ॥ इत्यधिवासनम्।प्रासादोऽपिचेन्नूतनस्तस्याप्यधिवासनम्।तत्र प्रासादाग्रे एकाशीतिपदं मंडलम् अक्षतैः कृत्वा तेषु सप्तधान्यपुञ्जान्कृत्वा जलपूर्णानेकाशीतिकुम्भानाहृत्य तत्र नवनवकानां मध्यमं मध्यमं कोष्ठं ज्ञात्वा तेषु नवकुम्भान् मध्यपूर्वादिक्रमेण विन्यस्य मध्यकुम्भे शम्युदुम्बराश्वत्थचम्पकाशोक

---

१ आजिघ्रकलश मह्युरुधारापयस्वत्यावाविंशत्विन्दवः । समुद्रमिव सिन्धव. इतिमन्त्रेणाहृत्य ।

पलाशप्लक्षन्यग्रोधकदम्बाम्रबिल्वार्जुनवृक्षसंभवं पल्लवद्वादशकं सोमाय वनस्पत्यन्तर्गतायनम इति निक्षिपेत् । ततः पद्मकरोचनादूर्वाङ्कुरदर्भपिंजुलश्वेतपीतसर्षपसितरक्तचन्दनजातीकुसुमकुन्दनन्द्यावर्तमिति दशकं पूर्वे । यवव्रीहितिलसुवर्णरजतसमुद्रगामिनदीकूलमृत्तिकाभूम्यस्पृष्टगोमयामिति सप्तकमाग्नेये । सहदेवीविष्णुक्रान्ताभृङ्गराजमहौषधीशमीशतावरीगुडूचीश्यामाकमित्यष्टकं याम्ये । कदलीपूगीफलनारिकेलबिल्वनारिङ्गमातुलिङ्गबदरीआमलकमिति फलाष्टकं नैर्ऋत्ये । मन्त्रसाधितं पञ्चगव्यं वारुणे। शम्युदुम्बराश्वत्थन्यग्रोधपलाशकषायपञ्चके वायव्ये । शङ्खपुष्पीसहदेवीबलाशतावरीकुमारीगुडूचीवचाव्याघ्रीति मूलाष्टकं सौम्ये । वल्मीकादिसप्तमृत्तिका ईशानकुंभे निधाय हिरण्यवर्णां हरिणीमिति मध्यकुंभानभिमन्त्र्य शेषान् गन्धोदकपूरितान् मध्यमादिकलशानां समन्तात् पूर्वादिक्रमेणाष्टौ विन्यस्य मूलमन्त्रेणाभिमन्त्र्य सूत्रेणावेष्ट्यान्तर्बहिरधस्तादूर्ध्वं च प्रासादं पञ्चगव्येन संप्रोक्ष्य मूर्धानं दिव इति वल्मीकमृदा विलिप्य समुद्रज्येष्ठा इतीशानदिक्स्थेन मृत्तिकाकुंभेन स्नापयेत् । यज्ञायज्ञाय इति वायव्येन कषायकुंभेन । पयः पृथिव्यामिति वारुणेन पञ्चगव्यकुंभेन । याः फलिनीरिति नैर्ऋत्यफलकुंभेन हंसः शुचिषदिति सौम्यस्थमूलकुंभेन। विष्णोरराटमसीति पूर्वकुंभेन। सोमं राजानमिति वह्निस्थकुंभेन।

विश्वतश्चक्षुरितियाम्यकुंभेन । नमोस्तु सर्पेभ्य इति मध्यमकुंभेन । इदमापः प्रवहतेत्यष्टाभिः पूर्वादि क्रमेण प्रासादं सशिखरं स्नापयेत्। एकाशीतिकुंभासंभवे तु गन्धोदकपूरितेनैककलशेन। दैव्याय कर्मणे शुन्धध्वामिति संप्रोक्ष्य सूत्रेणावेष्टय स्नापयित्वा देवरूपं प्रासादं चिन्तयित्वा पताकादिना शोभयित्वा गन्धादिना पूजयित्वा तस्याधस्ताद्देवं संचिन्त्य मन्त्रेण प्रासादमधिवासयेत् ॥ तद्यथा—ॐ ह्रीं सर्वदेव मयाचिन्त्यसर्वरत्नोज्ज्वलाकृते।यावच्चन्द्रश्च सूर्यश्च तावदत्र स्थिरो भव॥इत्याधिवास्य पिण्डिकावाहनप रिवारदेवतानां तत्तन्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याकं होमं तिलैः कृत्वा मूलमन्त्रेण चर्वष्टोत्तरशतं हुत्वा चतस्रो गा विष्णुगायत्र्या दुग्ध्वा क्षीरेण विष्णुगायत्र्या चरुं श्रपयित्वा देवाय निवेद्य द्वादशब्राह्मणान् भोजयित्वा विष्णुर्मे त्रायतामिति वदेत् ततआचार्याय धेनूर्दत्त्वा रात्रौ जागरणं कुर्यात् । इति प्रासादाधिवासनम् ॥ अत्र ज्येष्ठमध्यमकनिष्ठानां प्रतिमानां सप्तरात्रं पञ्चरात्रं त्रिरात्रमेकारात्रं सद्योवा बल्यन्तमधिवासनं कुर्यादिति पद्धतिकाराः । अत्रश्लोकाः—अनेकदिननिर्वर्त्ये अधिवासनकर्मणि। होमानष्टौ सहस्राणि विदधीरन्पृथक्पृथक् ॥ तस्मिन्नेकाहनिर्वर्त्ये कुर्यादष्टोत्तरं शतम् । प्राग्वत्पूर्णाहुतिं हुत्वा स कृज्जपन्ति द्वारपाः॥ यद्वाप्रतिदिनंहोममष्टोत्तरशतंशतम् । देशिकोमूर्तिपैः कुर्याद्यावत्कार्यं समाप्यते ॥

बलिं सन्ध्यासु तिसृषु मन्त्रदद्याद्यथोदितैः । आचार्ये दक्षिणा देया ऋत्विग्भ्यश्च स्वशक्तितः ॥ भोजनं च तथान्येभ्यो देयं वित्तानुसारतः । विनाधिवासनं यज्ञः कृतोऽपि न फलप्रदः ॥ इति ॥ ततो गुरुर्बहिर्निर्गत्य प्रासादाभिमुखो भूत्वा तद्देवरूपं ध्यायेत् । तथाहि—पादौ पादशिलास्तस्य जङ्घापादो र्ध्वमुच्यते । गर्भश्चैवोदरं ज्ञेयं कटिश्च कटिमेखला । स्तम्भाश्च बाहवो ज्ञेया घण्टा जिह्वा प्रकीर्तिता ॥ दीपः प्राणोऽस्य विज्ञेयो ह्यपानो जलनिर्गमः । ब्रह्मस्थानं यदेतच्च तन्नाभिः परिकीर्तिता ॥ हृत्पद्मं पिण्डिका ज्ञेया प्रतिमा पुरुषः स्मृतः । पादचारस्त्वहङ्कारो ज्योतिस्तच्चक्षुरुच्यते ॥ तदूर्ध्वं प्रकृतिस्त स्य प्रतिमात्मा स्मृतो बुधैः । तलकुम्भादधो द्वारं तस्य प्रजननं स्मृतम् ॥ शकुनासा भवेन्नासा गवाक्षः कर्ण उच्यते । कपोतपालीः स्कन्धोऽस्य ग्रीवा चामलसारिका ॥ कलशस्तु शिरो ज्ञेयं मज्जादिप्रदसंहि तम् । मेदश्चैव सुधां विद्यात्प्रलेपो मांसमुच्यते ॥ अस्थीनि च शिलास्तस्य स्नायुः कीलादयः स्मृताः । चक्षुषी शिखरास्तस्य ध्वजाः केशाः प्रकीर्तिताः ॥ एवं पुरुषरूपं तं ध्यात्वा च मनसा सुधीः । प्रासादं पूजयेत्पश्चाद्गन्धध्वजादिभिः शुभैः ॥ सूत्रेण वेष्टयेद्देवं वासस्तत्परिकल्पयेत् । प्रासादमेवमभ्यर्च्य वाहनं चाग्रमंडपे॥इति ॥ ततः कुण्डे वास्तोष्पत इतिमन्त्रेणाष्टोत्तरशतं हुत्वा देवमन्त्रेण च हुत्वा पूर्णाहुत्यन्तं

